अथ

# गंगालहंरीप्रारम्भः ।

श्रीगणेशाय नमः ॥ समृद्धं सौभाग्यं
सकलवसुधायाः किमपितन्महैश्वर्यंल्ली
लाजनितजगतः खण्डपरशोः ॥ श्रुतीनां
सर्वस्वंसुकृतमथमूर्त्तंसुमनसां सुधासौं
दर्यंतेसलिलमशिवंनः शमयतु ॥ १ ॥ द
रिद्राणांदैन्यंदुरितमथदुर्वासनहृदां द्रुतं
दूरीकुर्वन्सकृदपि गतो दृष्टिसरणिम् ॥
अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह

प्रवाहस्ते वारां श्रियमयमपारां दिशतु
नः ॥ २ ॥ उदञ्चन्मार्तण्डस्फुटकपटहे
रंबजननी कटाक्षव्याक्षेपक्षणजनितसं
क्षोभनिवहाः ॥ भवंतु त्वंगंतो हरशिरसि
गंगातनुभुवस्तरंगाःप्रोत्तुंगा दुरितभय
भंगायभवताम् ॥ ३ ॥ तवाऽऽलंबादंबस्फुर
दलघुगर्वेणसहसामयासर्वेऽवज्ञासरणि
मथ नीताः सुरगणाः ॥ इदानीमौदास्यं

भजसि यदि भागीरथि तदा निराधारो
हा रोदिमि कथयकेषामिहपुरः ॥ ४ ॥
स्मृतिंयातापुंसामकृतसुकृतानामपि च
याहरत्यंतस्तंद्रांतिमिरमिव चंद्रांशुसर
णिः॥इयं सा ते मूर्तिःसकलसुरसंसेव्य
सलिलाममांतःसंतापं त्रिविधमपिपापं
चहरताम् ॥ ५ ॥ अपिप्राज्यंराज्यंतृण
मिवपरित्यज्यसहसा विलोलद्वानीरंत

काचयच्चमत्कृतिंतन्वतीतनोतु ममशंत
नोःसपदिशंतनोरंगना॥४९॥मंत्रैर्मौलि
तमौषधैर्मुकुलितं त्रस्तं सुराणांगणैः
स्रस्तं सांद्रसुधारसैर्विदलितंगारुत्मतै
र्ग्रावभिः ॥वीचीक्षालितकालियाहितप
देस्वर्लोककल्लोलिनि त्वं तापं निरयाधु
नाममभवज्वालावलीढात्मनः ॥५०॥
यते नागेंद्रकृत्तिप्रमथगणमणी श्रेणिनं

ग ग० दीन्दुमुख्यं सर्वस्वंहारायित्वा स्वमथपु ल०
१९ रभिद्द्राक्पणीकतुकामे ॥ साकूतं हैम
वत्यामृदुलहसितया वीक्षितायास्तवांब
व्यालोलोल्लासिवल्गल्लहारिनटघटीतांड
वं नः पुनातु ॥ ५१ ॥ विभूषितानंगरि
पूत्तमांगा सद्यःकृतानेकजनार्त्तिभंगा ॥
मनोहरोत्तुंगचलत्तरङ्गा गङ्गा ममाऽङ्गा १९
न्यमलीकरोतु ॥ ५२ ॥ इमां पीयूषलह

वजनानितीरंश्रितवताम्।सुधातःस्वादी
यः सलिलभरमातृप्तिपिबतांजनानामा
नंदः परिहसति निर्वाणपदवीम् ॥ ६ ॥
प्रभाते स्नातीनांनृपतिरमणीनां कुचत
टीगतोयावन्मातर्मिलतितवतोयैर्मृगम
दः॥मृगास्तावद्वैमानिकशतसहस्त्रैःपरि
वृताविशंति स्वच्छंदं विमलवपुषोनंदन
वनम् ॥ ७॥स्मृतंसद्यःस्वांतंविरचयति

शांतंसकृदपि प्रगीतंयत्पापंझटितिभव
तापंचहरति॥इदंतद्गंगेतिश्रवणरमणीयं
खलुपदं ममप्राणप्रांतर्वदनकमलांतर्वि
लसतु॥ ८ ॥यदंतःखेलंतोबहुलतरसंतो
षभरिता न काका नाकाधीश्वरनगरसा
काङ्क्षमनसः॥ निवासाल्लोकानांजनि
मरणशोकापहरणं तदेतत्तेतीरंश्रमशम
नधीरंभवतुनः॥ ९ ॥नयत्साक्षाद्वेदैरपि

गलितभेदैरवासितं न यस्मिञ्जीवानांप्र
सरतिमनोवागवसरः॥ निराकारंनित्यं
निजमहिमनिर्वासिततमो विशुद्धंयत्त
त्त्वंसुरतटिनितत्त्वंनविषयः॥१०॥महा
दानैर्ध्यानैर्बहुविधवितानैरपि च यन्न ल
भ्यंघोराभिःसुविमलतपोराशिभिरपि॥
अचिंत्यं तद्विष्णोः पदमखिलसाधारण
तया ददाना केनासि त्वमिह तुलनीया

कथयनः॥ ११ ॥नृणामीक्षामात्रादपिप ल०
रिहरंत्याभवभयांशिवायास्तेमूर्तेः क इह
महिमानं निगदतु ॥ अमर्षम्लानायाः
परममनुरोधं गिरिभुवो विहाय श्रीकंठः
शिरसिनियतंधारयतियाम्॥ १२॥विनि
न्द्यान्युन्मत्तैरपिचपरिहार्याणि पतितैर
वाच्यानिव्रात्यैः सपुलकमपास्यानिपि ४
शुनैः ॥ हरंतीलोकानामनवरतमेनांसि

कियता कदाप्यश्रांतत्वं जगतिपुनरे
काविजयसे ॥ १३ ॥ स्खलंतीस्वर्लोका
दवनितलशोकापहृतये जटाजूटग्रंथौ
यदासिविनिबद्धापुरभिदा ॥ अयेनिर्लो
भानामपिमनसिलोभंजनयतां गुणाना
मेवायंतवजननि दोषःपरिणतः ॥१४॥
जडानन्धान्पंगून्प्रकृतिबधिरानुक्तिविक
लान्ग्रहग्रस्तानस्ताखिलदुरितनिस्तार

गं० सरणीन्॥ निलिंपैर्निर्मुक्तानपिचनिरयां ल०
५ तर्निपततो नरानंव त्रातुं त्वमिहपरमं
भेषजमसि ॥१५॥स्वभावस्वच्छानांस
हजशिशिराणामयमपामपारस्ते मात
र्जयति महिमा कोपि जगति॥मुदायंगा
यंतिद्युतलमनवद्यद्युतिभृतःसमासाद्या
द्यापिस्फुटपुलकसांद्राःसगरजाः॥१६॥ ५
कृतक्षुद्रैनस्कानथ झटितिसंतप्तमनसः

समुद्धर्तुं संति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरिता
न्नरानूरीकर्तुं त्वमिव जननि त्वं विजयसे
॥ १७ ॥ निधानं धर्माणां किमपि च
विधानं नवमुदां प्रधानं तीर्थानाममलप
रिधानं त्रिजगतः॥ समाधानं बुद्धेरथ ख
लुतिरोधानमाधियां श्रियामाधानं नः प
रिहरतु तापं तव वपुः ॥ १८ ॥ पुरो धावं धा

वंद्रविणमदिराघूर्णितदृशां महीपानांना

नातरुणतरखेदस्यनियतम् ॥ ममैवायं
मंतुःस्वहितशतहंतुर्जडधियोवियोगस्ते
मातर्यदिहकरुणातःक्षणमपि ॥१९॥ म
रुल्लीलालोलल्लहरिलुलिताम्भोजपटली
स्खलत्पांसुव्रातच्छुरणविसरत्कौंकुमरु
चि ॥ सुरस्त्रीवक्षोजक्षरदगरुजंबालज
टिलंजलंते जंबालं ममजननजालंजरय

तु ।२०॥ समुत्पत्तिः पद्मारमणपदपद्मामलनखान्निवासः कन्दर्पप्रतिभटजटाजूटभवने ॥ अथायं व्यासंगो हतपतितनिस्तारणविधौ न कस्मादुत्कर्षस्तव जलनिजागर्तिजगति ॥२१॥ नगेभ्योयांतीनां कथय तटिनीनां कतमया पुराणां संहर्तुः सुरधुनिकपर्दोधिरुरुहे ॥ कयाचश्रीभर्तुः पदकमलमक्षालि सलिलैस्तुलाले

गं० वंद्रविणमदिराघूर्णितदृशां महीपानांना ल०
८ नातरुणतरखेदस्यनियतम् ॥ ममैवायं
मंतुःस्वहितशतहंतुर्जडधियोवियोगस्ते
मातर्यदिहकरुणातःक्षणमपि ॥१९॥ म
रुल्लीलालोलल्लहरिलुलिताम्भोजपटली
स्खलत्पांसुव्रातच्छुरणविसरत्कौंकुमरु
चि ॥ सुरस्त्रीवक्षोजक्षरदगरुजंबालज ८
टिलंजलंते जंबालं ममजननजालंजरय

तु ।२०॥समुत्पत्तिःपद्मारमणपदपद्मामलनखान्निवासः कन्दर्पप्रतिभटजटाजूटभवने ॥ अथायं व्यासंगो हृतपतितनिस्तारणविधौ न कस्मादुत्कर्षस्तव जननिजागर्तिजगति ॥२१॥ नगेभ्योयांतीनां कथय तटिनीनां कतमयापुराणांसंहर्तुःसुरधुनिकपर्दोधिरुरुहे ॥ कयाचश्रीभर्तुः पदकमलमक्षालि सलिलैस्तुलाले

शो यस्यां तव जनानि दीयेत कांवेभिः॥
॥ २२ ॥ विधत्तां निःशंकं निरवधिसमा
धिं विधिरहोसुखंशेषे शेतांहरिरविरतंनृ
त्यतु हरः ॥ कृतं प्रायश्चित्तैरलमथतपो
दानयजनैः सवित्रीकामानां यदि जग
तिजागर्त्ति भवती॥२३॥अनाथः स्नेहा
र्द्रां विगलितगतिः पुण्यगतिदां पतन्वि
श्वोद्धर्त्रीं गदविगलितः सिद्धभिषजम्॥

सुधासिंधुंतृष्णाकुलितहृदयोमातरमयं
शिशुः संप्राप्तस्त्वामहमिह विदध्याः स
मुचितम् ॥२४॥ विलीनोवैवैवस्वतनगर
कोलाहलभरोगतादूतादूरं क्वचिदपिपरे
तान्मृगयितुम् ॥ विमानानांव्रातोविदल
यति वीथीर्दिविषदांकथा ते कल्याणी
यदवधि महीमण्डलमगात् ॥२५॥ स्फुर
त्कामक्रोधप्रबलतरसंजातजटिलज्वर

गं० ज्वालाजालज्वलितवपुषां नः प्रतिदिन ल०
८ मू॥हरन्तांसन्तापंकमपिमरुदुल्लासलह
रिच्छटाचंचत्पाथःकणसरणयो दिव्य
सरितः॥२६॥इदं हि ब्रह्मांडं सकलभुव
नाभोगभवनं तरङ्गैर्यस्यांतर्लुठति परित
स्तिदुकामिव ॥ सएषश्रीकंठप्रविततज
टाजूटजटिलो जलानां संघातस्तवजन ८
नितापंहरतुनः॥२७॥त्रपंतेतीर्थानि त्व

रितमिह यस्योद्धतिविधौ करंकर्णैकुर्व
त्यपि किल कपालिप्रभृतयः॥ इमंतंमा
मंब त्वमियमनुकंपाद्र्हृदये पुनाना स
र्वैषामघमथनदर्पंदलयासि ॥२८॥ श्वपा
कानां व्रातैरमितविचिकित्साविचलितै
र्विमुक्तानामेकंकिलसदनमेनः परिषदा
म् ॥ अहोमामुद्धर्तुंजननिघटयंत्याः प
रिकरं तवश्लाघांकर्तुंकथमिव समर्थोनर

गं० ९

पशुः ॥ २९ ॥ नकोप्येतावंतं खलु सम
यमारभ्य मिलितो यदुद्धारादाराद्भवति
जगतो विस्मयभरः ॥ इतीमामीहांतेम
नसिचिरकालं स्थितवतीमयंसंप्राप्तोहं
सफलयितुमव प्रण यतः ॥ ३० ॥ श्ववृत्ति
व्यासंगो नियतमथ मिथ्याप्रलपनं कुत
र्कैष्वभ्यासः सततपरपैशुन्यमननम् ॥
अपिश्रावंश्रावंममतुपुनरेवंगुणगणानृते

ल० ९

त्वत्कोनाम क्षणमपिनिरीक्षेतवदनम् ॥
॥३१॥विशालाभ्यामाभ्यां किमिहनय
नाभ्यांखलुफलं न याभ्यामालीढापरम
रमणीयातवतनुः ॥ अयंहिन्यक्कारोजन
निमनुजस्यश्रवणयोर्ययोर्मातर्यातस्त
वलहरिलीलाकलकलः ॥३२॥ विमानैः
स्वच्छन्दं सुरपुरमयंते सुकृतिनःपतंति
द्राक्पापा जननि नरकांतः परवशाः ॥

नींत

 विभागोयं तस्मिन्नशुभमयमूर्त्तौ जनप 
 दे न यत्र त्वंलीलादलितमनुजाशेषकलु
षा ॥ ३३ ॥ अपि घ्नंतो विप्रानविरत
मुशंतोगुरुसतीः पिबंतोमैरेयंपुनरपिहरं
तश्च कनकम् ॥विहाय त्वय्यंते तनुमत
नुदानाध्वरजुषामुपर्य्यंबक्रीडंत्यखिलसु
रसंभावितपदाः ॥ ३४ ॥ अलभ्यंसौर 
भ्यं हरति सततं यः सुमनसां क्षणादेव

प्राणानपि विरहशस्त्रक्षतभृताम् ॥ त्वदी
यानां लीलाचलितलहरीणां व्यतिकरा
त्पुनीतेसोपिद्रागहह पवमानस्त्रिभुवन
म् ॥३५॥ कियंतःसंत्येकेनियतमिहलो
कार्थघटकाः परे पूतात्मानः कतिचपर
लोकप्रणयिनः ॥ सुखंशेते मातस्तव ख
लु कृपातः पुनरयंजगन्नाथः शश्वत्त्वयि
निहितलोकद्वयभरः ॥ ३६ ॥ भवत्या

हिव्रात्याधमपतितपाखंडपरिषत्परित्रा
णस्नेहः श्लथयितुमशक्यः खलु यथा ॥
ममाप्येवंप्रेमादुरितनिवहेष्वम्ब जगति
स्वभावोयं सर्वैरपिखलु यतोदुष्परिहरः
॥ ३७ ॥ प्रदोषांतर्नृत्यत्पुरमथनलीलो
द्धृतजटातटाभोगप्रेंखल्लहरि भुजसंतान
विधुतिः ॥ बिलक्रोडक्रीडज्जलडमरुटं
कारसुभगस्तिरोधत्तां तापं त्रिदशतटि

नीतांडवविधिः ॥ ३८ ॥ सदैवत्वय्येवा
र्पितकुशलचिंताभरामिमं यदि त्वं मामं
बत्यजासि समयेस्मिन्सुविषमे ॥ तदा
विश्वासोऽयंत्रिभुवनतलादस्तमयते नि
राधाराचेयं भवति खलुनिर्व्याजकरुणा
॥ ३९ ॥ कपर्दादुल्लस्य प्रणयमिलदर्धां
गयुवतेः पुरारःप्रेंखंत्योमृदुलतरसीमंत
सरणौ ॥ भवान्यासापत्न्यस्फुरितनय

२९

गं० नंकोमलरुचा करेणाक्षिप्तास्तेजनानिवि ल०
१२ जयंतां लहरयः ॥४० ॥ प्रपद्यंतेलोकाः
कतिन भवतीमत्रभवतीमुपाधिस्तत्रायं
स्फुरतियदभीष्टंवितरसि ॥शपेतुभ्यंमा
तर्मम तु पुनरात्मासुरधुनिस्वभावादेव
त्वय्यमितमनुरागंविधृतवान् ॥ ४१ ॥
ललाटयालोकैरिह खलु सलीलं तिल १२
किता तमोहंतुं धत्तेतरुणतरमार्तंडतुल

नाम् ॥ विलुंपंतीसद्योविधिलिखितदुर्व
र्णसरणिंत्वदीया सामृत्स्नाममहरतुकृ
त्स्नामपिशुचम् ॥४२॥नरान्मूढांस्तत्त
ज्जनपदसमासक्तमनसो हसंतः सोल्ला
सं विकचकुसुमव्रातमिषतः ॥ पुनानाः
सौरभ्यैः सततमलिनोनित्यमलिनाः
सखायोनः संतुत्रिदशतटिनीतीरतरवः
॥ ४३ ॥ यजंत्येकेदेवान्कठिनतरसेवां

गं० स्तदपरे वितानव्यासक्ता यमनियमर ल०
१३ क्ताःकतिपये ॥ अहंतुत्वन्नामस्मरणभृ
तिकामस्त्रिपथगे जगज्जालंजानेजननि
तृणजालेन सदृशम् ॥४४॥ अविश्रांतंज
न्माबाधि सुकृतजन्मार्जनकृतां सतां श्रे
यःकर्तुंकातिनकृतिनःसंतिविबुधाः॥निर
स्तालंबानामकृतसुकृतानांतुभवतीं वि १३
नाऽमुष्मिँल्लोके न परमवलोकेहितकर

म्॥ ४५ ॥पयःपीत्वामातस्तवसपदिया
तःसहचरैर्विमूढैःसंरंतुं क्वचिदपि न वि
श्रांतिमगमम्॥ इदानीमुत्संगेमृदुपवन
संचारशिशिरैश्चिरादुन्निद्रं मां सदयहृद
येस्थापयचिरम् ॥४६ ॥ बधानद्रागेवद्र
ढिमरमणीयंपरिकरं किरीटे बालेंदुंनिय
मय पुनःपन्नगगणैः ॥ न कुर्यास्त्वंहेला
मितरजनसाधारणतया जगन्नाथस्या

 यंसुरधुनिसमुद्धारसमयः॥४७॥शरच्चं 
 द्रश्वेतांशशिशकलशोभालमुकुटां करैः
कुंभांभोजे वरभयनिरासौ च दधताम्॥
सुधाधाराकाराभरणवसनां शुभ्रमकर
स्थितां त्वां ये ध्यायंत्युदयतिनतेषांप
रिभवः ॥ ४८ ॥ दरस्मितसमुल्लसद्वद
नकान्तिपूरामृतैर्भवज्वलनभार्जितानानि 
शमूर्जयंतीनरान् ॥ चिदेकमयचंद्रि

( कर्मकाण्डविभागे ६ ) 'मास्टर' मणिमालायाः दशमो मणिः

# अथ कुम्भ विवाहः
## प्रारम्भः

पं० श्रीवायुनन्दनमिश्रेण समुद्भासितः ।

प्रथमं संस्करणम ] [ मूल्यम -)॥

मास्टरमणिमालाया मणि दशमः कर्मकाण्डीयः ।
श्रीविश्वेशपदेभ्यः सादरमादौ समर्प्यते भक्त्या ॥




पं० श्रीवायुनन्दन मिश्र कर्मकाण्डी

श्री गणेशाय नमः ॥ अथ कुम्भविवाहप्रारम्भः ॥ तत्र पूर्वोक्तदिने कन्यापिता कन्यया सह एकान्ते विष्णुमन्दिरे गत्वा आसने प्राङ्मुख उपविश्य स्वदाक्षिणतः कन्यामुपवेश्य ॥ आचम्य प्राणानायम्य ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं पूजासामग्रीं च संप्रोक्ष्य ॥ हस्ते अक्षतपुष्पाणि गृहीत्वा आनोभद्रादीन्मंगलमंत्रान् पठेत् ॥ संकल्पः ॥ देशकालौ संकीर्त्य अमुकगोत्रः अमुकशर्माहं अमुकगोत्रायामुकनाम्नीकन्यायाः नक्षत्रादियोगेन पुनर्भूदोषाभावेन च विषाख्ययोगसम्भववैधव्यारिष्टपरिहारार्थं श्रीपरमेश्वरप्रीत्यर्थं कुम्भविवाहं करिष्ये ॥ तत्रादौ निर्विघ्नतार्थं

गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारा-
पूजनं आयुष्यमंत्रजपं नान्दीश्राद्धमाचार्यादिवरणानि च
करिष्ये ॥ तानि ग्रहशान्त्यनुसारेण कृत्वा ॥ ततस्तण्डुला-
ष्टदले मही द्यौरित्यादि मंत्रैः कलशं प्रतिष्ठाप्य पूर्णपात्रं निधाय
वस्त्रयुग्मेन संवेष्ट्य तत्र वरुणं सम्पूज्य ॥ तत्राग्न्युत्तारण-
प्राणप्रतिष्ठापूर्वकं स्वर्णमयाविष्णुरूपाश्वत्थद्रुमप्रतिमां प्रतिष्ठाप्य
षोडशोपचारैः सम्पूज्य प्रार्थयेत् ॥ वरुणाङ्गस्वरूपाय जीवनानां
समाश्रय ॥ पतिं जीवय कन्यायाश्चिरं पुत्रं सुखं कुरु ॥ देहि
विष्णो वरं देहि कन्यां पालय दुःखतः ॥ ततो मधुपर्कवस्त्रा-
लंकारार्पणम् ॥ अंतःपटं—कन्यां कुम्भान्तराले धृत्वा मंगल-
पद्याष्टकं पठित्वा ॥ गौरीनन्दनगौरवर्णवदनः भृङ्गारलम्बोदरः

सिन्दूरार्चितदिग्गजेन्द्रवदनः पादौ रणन्नूपुरौ ॥ कर्णौ लम्ब-विलम्बगण्डविलसत्कण्ठे च मुक्तावली श्रीविघ्नेश्वर विघ्न-भञ्जनकरो देयात्सदामङ्गलम् ॥ १ ॥ ईशानो गिरिशो मृडः पशुपतिः शूली शिवः शङ्करो भूतेशः प्रमथाधिपः स्मरहरो मृत्युञ्जयो धूर्जटिः ॥ श्रीकण्ठो वृषभध्वजो हरभवो गङ्गाधर-स्त्र्यम्बकः श्रीरुद्रः सुरवृन्दवन्दितपदः कुर्यात् सदा मङ्गलम्॥२॥ गौरी श्रीरदितिश्च कद्रुसुभगा भूतिः सुपर्णा शुभा सावित्री तु सरस्वती वसुमती सत्यव्रताऽरुन्धती ॥ स्वाहा जाम्बवती च रुक्मभगिनी दुःस्वप्नविध्वंसिनी ॥ वेला चाम्बुनिधेः समीनमकराः कुर्वन्तु वो मङ्गलम् ॥ ३ ॥ नेत्राणां त्रितयं शिवं पशुपतेरग्नित्रयं पावनं यद्वद्विष्णुपदत्रयं त्रिभुवने

कुं. वि.

ख्यातं च रामत्रयं ॥ गंगावाहपथत्रयं सुविमलं देवत्रयं त्रिस्वरं संध्यानां त्रितयं द्विजैरभिहितं कुर्वन्तु वो मङ्गलम् ॥ ४ ॥ अश्वत्थो वटवृक्षचन्दनतरुर्मन्दारकल्पद्रुमौ जम्बूनिम्बकदम्ब-चूतसरला वृक्षाश्च ये क्षीरिणः ॥ सर्वे ते फलमिश्रिताः प्रतिदिनं विभ्राजिताः सर्वतो रम्यं चैत्ररथं सनन्दनवनं कुर्वन्तु वो मङ्गलम् ॥ ५ ॥ ब्रह्मा वेदपतिः शिवः पशुपतिः सूर्यश्च चक्षुष्पतिः शुक्रो देवपतिर्यमः पितृपतिः स्कन्दश्च सेनापतिः ॥ यक्षो वित्तपतिर्हरिश्च जगतां वायुः पतिः प्राणिनामन्ये ये पतयो वसन्ति सततं कुर्वन्तु वो मङ्गलम् ॥ ६ ॥ श्रीकाली जगदम्बिका भगवती सिद्धेश्वरी कामदा श्री-लक्ष्मी जगदीश्वरस्य दयिता श्रीजानकी रुक्मिणी ॥ श्रीवाणी

सुखदा जनस्य मतिदा त्रैलोक्यरक्षाकरी श्रीदुर्गा वरकन्ययो-
र्वितनुते कल्याणराशिं सदा ॥ ७ ॥ श्रीकाशीश्वर ईश्वरो
गुणनिधिर्विश्वेश्वरो धर्मदः श्रीरामस्य प्रियः सुरेश्वरगुरुर्ग-
ङ्गाधरस्त्र्यम्बकः ॥ श्रीभर्गो गिरिजापतिः पशुपतिः शूली
पिनाकी शिवः ॥ श्रीशम्भुर्वरकन्ययोर्वितनुते कल्याणराशिं
सदा ॥ ८ ॥ ॐ प्रतिष्ठ ॥ इत्यनन्तरं पटं निःसार्य ॥
कन्यायै वस्त्रोपवस्त्रमंगलतन्तुबन्धनसमीक्षणान्तं मंत्रपठनेन
दत्त्वा ॥ दशवारमधस्तादुपरि च कुम्भं कन्यां च ॥ तत्र
मंत्रः ॥ ॐ परित्वाग्ने पुरंव्वयांव्विप्रꣳ सहस्यधीमहि ॥
धृषद्वर्णन्दिवेदिवेहन्तारंभङ्गुरावताम् ॥ १ ॥ त्वमग्नेद्युभि-
स्त्वमाशुशुक्षणिस्त्वमद्भयस्त्वमश्मनस्परि ॥ त्वं व्वनेभ्यस्त्वमो-

 षधीभ्यस्त्वन्नृणान्नृपतेजायसेशुचिः इत्यनुवाकेन सूत्रं सं- 
 वेष्ट्य ॥ कुंभस्थविष्णवे कन्यां समर्पयेत् ॥ गौरीं कन्यामिमां
श्लक्ष्णां यथाशक्ति विभूषिताम् ॥ ददामि विष्णवे तुभ्यं
सौभाग्यं देहि सर्वदा ॥ विष्णुरूपिणेऽश्वत्थकुम्भायेमां कन्यां
श्रीरूपिणीं संप्रददे ॥ इति समर्पयेत् ॥ ततो वेष्टितसूत्रात्कुम्भं
निःसार्य जले प्रमृज्य ॥ तत आचार्यः शुद्धजलेन ऐन्द्रवारु-
णपावमानीयमंत्रैः पल्लवेन कन्यामभिषिच्य ॥ ततो ऐंद्र-
मंत्राः ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳ
शूरमिंद्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वास्तिनोमघवाधात्वि- 
न्द्रः ॥ १ ॥ इन्द्रः सुत्रामास्ववाँ२॥ऽअवोभिःसुमृडीकोभवतु

ञ्विश्श्ववेदाः ॥ बाधंतान्द्वेषोऽअभयङ्कृणोतु सुवीर्य्यस्यपतयः-
स्याम ॥ २ ॥ तस्यव्वयर्ठ० सुमतौयज्ञियस्यापिभद्द्रेसौमन-
सेस्याम ॥ ससुत्रामास्ववाँ२॥ऽइन्द्रोऽअस्मेऽआराच्चिद्द्वेषः
सनुतर्य्युयोतु ॥ ३ ॥ आमन्द्रैरिन्द्रहरिभिर्य्याहिमयूररोमभिः ॥
मात्वाकेचिन्नियमन्न्विन्नपाशिनोतिधन्न्वेवताँ२॥ऽइहि ॥ ४ ॥
एवेदिन्द्रंवृषणंव्वज्ज्रबाहुंव्वसिष्ठासोऽअभ्यर्च्चन्त्यर्कैः ॥ सनं-
स्तुतोवीरवद्धातुगामद्यूयम्पातस्वस्तिभिःसदानः ॥ ५ ॥ ततो
वारुणमंत्राः ॥ ॐ इमम्मेंव्वरुणश्श्रुधीहवमद्याचमृडय ॥
त्वामवस्युराचके ॥ १ ॥ तत्त्वांयामिव्व्रह्मणाव्वन्दमानस्तदा-

कुं. ४

शांस्तेयजमानोहविर्भिः ॥ अहेडमानोव्वरुणेहबोध्युरुशꣳस समानऽआयुः प्रमोषीः ॥ २ ॥ त्वन्नोऽअग्नेव्वरुणस्यव्विद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमः शोशुचानोविश्श्वाद्वेषांꣳसिप्रमुमुग्ग्ध्यस्म्मत् ॥ ३ ॥ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽउषसोव्व्युष्टौ ॥ अवयक्ष्वनोव्वरुणꣳ ररांणोव्वीहिमृडीकꣳ सुहवोनऽएधि ॥ ४ ॥ ततः पावमानीयमंत्राः ॥ ॐ पुनन्तुमापितरः सोम्म्यासः पुनन्तुमा पितामहाः पुनन्तुप्रपितामहाः ॥ पवित्रेणशतायुषा ॥ पुनन्तु मापितामहाः पुनन्तुप्रपितामहाः ॥ पवित्रेणशतायुषाव्वि-

वि. ४

श्त्रमायुर्व्यश्नवै ॥ १ ॥ अग्ग्नऽआयूंषिपवसऽआ-
सुवोर्ज्जमिषञ्चनः ॥ आरेवांधस्वदुच्छुनांम् ॥ २ ॥
पुनन्तुमादेवजनाः पुनन्तु मनंसाधियं÷ ॥ पुनन्तु व्विश्श्वा-
भूतानिजातवेदः पुनीहिमां ॥ ३ ॥ पवित्रेण पुनीहिमा
शुक्रेणदेवदीद्यंत् ॥ अग्ग्नेकत्त्वाक्रतूँरनुं ॥ ४ ॥ यत्तेंपवित्रं
मर्च्चिष्यग्ग्नेव्वितंतमन्तरा ॥ ब्रह्मतेनंपुनातुमा ॥ ५ ॥
पवमानःसोऽअद्यनं÷पवित्रेण व्विचर्षणिः ॥ यः पोता स
पुंनातुमा ॥ ६ ॥ उभाभ्यान्देवसवितः पवित्रेण सवेनं च ॥
माम्पुंनीहि व्विश्श्वतं÷ ॥ ७ ॥ व्वैश्श्वदेवीपुंनती देव्व्या-

गाद्यस्यांमिमावह्वयस्तन्न्वोव्वीतपृंष्ठाः ॥ तयामदंन्तःसध
मादेंषुव्वयꣳस्यांमपतंयोरयीणाम् ॥ ८ ॥ इति अभिषिच्य ॥
शुद्धवाससी परिधाप्य ॥ वैवाह्यवस्त्रादिकं सर्वं आचार्याय
दद्यात् ॥ अनघाद्यास्मीति त्रिवारं कन्या वदेत् ॥ एवम-
स्त्विति द्विजो ब्रूयात् ॥ आचार्याय वरं दद्यात् ॥ तद्यथा ॥
कृतैतत्कुम्भविवाहकर्मणः साङ्गतासिध्यर्थं गोनिष्क्रयं आचा-
र्याय तुभ्यमहं संप्रददे ॥ तन्मध्ये न्यूनातिरिक्तदोषपरिहारार्थं
नानानामगोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां विभज्य
दातुमहत्सृजे ॥ तस्मादाशिषो गृहीत्वा ॥ प्रमादात्कुर्वतां कर्म
प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति
श्रुतिः ॥ विष्णवे नम इति त्रिः पठेत् ॥ इति कुम्भविवाहः ॥

## अथ बालवैधव्यहरविष्णुमूर्तिदानम् ॥

तत्प्रकारो नारदेनोक्तः ॥ ब्राह्मणं साधुमामंत्र्य संपूज्य विविधार्हणैः ॥ तस्मै दद्याद्विधानेन विष्णोर्मूर्त्तिं चतुर्भुजाम् ॥ शुद्धवर्णसुवर्णेन पलस्यैकसुलक्षणाम् ॥ तदर्धेन तदर्धेन वित्तशक्त्यनुसारतः ॥ निर्मितां रुचिरां शंखगदाचक्राब्ज-संयुताम् ॥ दधानां वाससी पीते कुमुदोत्पलमालिकाम् ॥ सदक्षिणां च तां दद्यान्मंत्रमेतमुदीरयेत् ॥ प्रयोगस्तु ॥ देशकालकीर्तनान्ते मम वैधव्यारिष्टनिरसनार्थमखण्डसौभा-ग्यप्राप्तये च विष्णुप्रतिमादानं करिष्ये ॥ ततः ताम्रपात्रं तण्डुलेनापूर्य तदुपरि स्वर्णमयीं कृताग्न्युत्तारणप्राणप्रतिष्ठां

विष्णुप्रतिमां चतुर्भुजायुधान्वितां प्रतिष्ठाप्य षोडशोपचारैः
पूजयेत ॥ पूजाकाले पीताम्बरादि वस्त्राणि कुण्डलाद्यलङ्कारा-
न्कुंकुमादिपुष्पमालाश्चार्पयित्वा प्रणमेत् ॥ भगवन्कमला-
कान्त सर्वमङ्गलदायक ॥ हत्वा सर्वाण्यरिष्टानि सौभाग्यं
चाभिवर्द्धय ॥ इति सम्प्रार्थ्य ॥ ततः प्रतिगृहीतारं ब्राह्मणं
सम्पूज्यार्चितप्रतिमां सोपस्करां दद्यात् ॥ दानमंत्रस्तु ॥
यन्मया प्राच्यजनुषि घ्नन्त्या पतिसमागमम् ॥ विषोपविष-
शस्त्राद्यैर्हन्तो वातिसुरक्तया ॥ प्राप्यमाणं महाघोरं यशः-
सौख्यधनापहम् ॥ वैधव्याद्यतिदुःखौघान्नाशय सुखलब्धये ॥
बहुसौभाग्यदात्रीं च महाविष्णोरिमां तनुम् ॥ सौवर्णी प्रतिमां
शक्त्या तुभ्यं संप्रददे द्विज ॥ इमां मयार्चितां विष्णुप्रतिमां

सोपस्करां वैधव्यारिष्टनिरासार्थं अखण्डसौभाग्यप्राप्तये च अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे इति दत्त्वा ॥ यथाशक्ति सुवर्णदाक्षिणां दत्त्वा ॥ तस्मादाशिषो गृहीत्वा ॥ कन्या अनघाद्याहमस्मीति त्रिर्वदेत् ॥ एवमास्त्विति विप्रोक्तिं गृहीत्वा ॥ ब्राह्मणान्भोजयेत् ॥ ततो वैवाहिकं कुर्यात् ॥

इति वैधव्ययोगहरविष्णुप्रतिमादानम् ।

७

प्रकाशक—

मास्टर खेलाड़ीलाल एण्ड सन्स,

संस्कृत-बुकडिपो, कचौड़ीगली, बनारस सिटी।

कृ० व० पावगी द्वारा

हितचिन्तक प्रेस, रामघाट, बनारस सिटी में मुद्रित : ५५६ a

७

## ॥ पं० श्रीवायुनन्दनमिश्रकृतग्रन्थरत्नानि ॥

# इति कुम्भ विवाहः

समाप्तः ।

Published by J. N. Yadava for *Messrs. Master* Khelari Lal & Sons, Benares City.

'मास्टर 'मणिमाला,याः १२२ संख्यको मणिः (कर्मकाण्डविभागे २९)

आयुर्वर्द्धनकृत्यसहिता

# जन्मदिनपूजापद्धतिः

काशीस्थसुप्रसिद्धमध्यमेश्वरवास्तव्येना-
नेककर्मकाण्डग्रन्थनिर्मात्रा

पं० श्रीवायुनन्दनमिश्रकर्मकाण्डिना

विरचिता ।

सा च

कशीस्थ 'संस्कृत बुकडिपो' ऽधिपतिभिः
मास्टर खेलाड़ीलाल ऐण्ड सन्स इत्येतैः
'मास्टर प्रिण्टिङ्ग वर्क्स' नाम्नि मुद्रणागारे
मुद्रापयित्वा प्रकाशिता ।

मूल्यम् -)

# जन्मदिवस पूजन सामग्री



)। रोरी
)॥ नारा
)। अबीर
)= बुका
)= मेंहदी की बुकनी
)= हरदी की बुकनी
−) मालाफूल
)। धूप बत्ती
दीप बत्ती १०
पेड़ा ऽ।
बतासा ऽ=
)− फल
गौका दूध ऽ।
)= तिल्ली
)= गुड़
)। पान
)= सोपाड़ी
वस्त्र चढ़ाने को

जनेऊ ५
नारियल १
वस्त्रफुटकर १। गज
कमण्डल १
होमका कटोरा १
पूर्णापात्रका लोटा १
वरण २
तिल्ली )।−
जौ ऽ।
चावल ऽ१॥
शर्करा ऽ=
घीव ऽ.−
)= पीली सरसों
हरदी गाँठ
पीला कपड़ा
नीमकी पत्ती
)= गुगुल
प्रतिमादि

अथ आयुर्वर्द्धनकृत्यसहिता

# जन्मदिनपूजापद्धतिः

श्रीगणेशाय नमः

ततो जन्मदिने सपत्नीको यजमानः सबालको मङ्गलं स्नात्वाऽहते वाससी परिधाय धृतमङ्गल-तिलको मातापित्रोर्गुर्वाचार्यकुलदेवता विप्रांश्च नत्वा गृहाभ्यन्तरतः शुभासने प्राङ्मुखोपविश्य स्वदक्षिणतः पत्नीं तद्दक्षिणतः कुमारमुपवेश्य धृतपवित्रपाणिः आचम्य प्राणानायम्य ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं पूजासामग्रीं च सम्प्रोक्ष्य हस्ते अक्षतपुष्पाणि गृहीत्वा आनोभद्रादीन्म-

ङ्गलमन्त्रान् सुमुखश्चैकदन्तश्चेत्यादि च पठेत्॥
सङ्कल्पः॥ देशकालौ सङ्कीर्त्य अस्य कुमारस्य जन्मलग्नाद्वा वर्षलग्नाद्ग्रहगोचराच्च उच्चनीचस्थितरवि-भौम-शनि-राहु--केतु--ग्रहजनित - स्वशरीरकफवातपित्तद्वंदजसन्निपातज्वराऽगन्तुक-शिरोनेत्रकरणदन्तस्कन्धोदरपाणिपादादि-शरीरावयवपीडादिनिवृत्यर्थं दशाऽन्तरदशा-वर्षदशा-मासदशा - दिवसदशादि-जनितारिष्ट-विनाशाय दैवदेवीराजविनायक-कूष्माण्ड-योगिनी-डाकिनी-शाकिनी-भूत-प्रेत-पिशाच-राक्षसासुर-दैत्य-दानव-वेतालादि-कृत - सर्वविघ्नविनाशाय अल्पायुर्निवृत्यर्थं आध्यात्मिकादितापत्रयविनाशाय रव्यादिपापग्रहसन्तुष्टद्वारा प्रबल-प्रताप-बल-पुष्टि-बुद्धि-कान्ति-कीर्ति-नैरुज्य-दीर्घायुष्यादि-सकल-विध्याज्य-साम्राज्य-प्राप्त्यर्थं श्रुति-स्मृति-पुराणोक्त-फलप्राप्तिपूर्वक-श्रीपरमेश्वरप्रीत्यर्थं अद्य जन्मदिने वर्धापनाख्यं कर्म करि-

ष्ये ॥ स्वयं करणे मम च दीर्घायुस्तेजोवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं अद्य मदीयजन्मदिने वर्धापनाख्यं कर्म करिष्ये ॥ तत्र निर्विघ्नस्यार्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं च करिष्ये ॥ ग्रहशान्त्यनुसारेण कृत्वा ॥ ततः श्रीपर्ण्यादिपीठे पंक्तिरूपेणाक्षतपुञ्जेषु देवता आवाहयेत् ॥ तद्यथा ॥ ॐ गणपतये नमः गणपतिमावाहयामि ॥ एवं सर्वत्र ॥ ॐ दुर्गायै नमः दुर्गामा० ॥ ॐ कुलदेवतायै० कुलदेवता० ॥ ॐ प्रजापतये० प्रजापतिं० ॥ ॐ विष्णवे० विष्णुं० ॥ ॐ महेश्वराय नमः० महेश्वरं० ॥ ॐ सूर्याय० सूर्यं० ॥ ॐ सोमाय० सोमं० ॥ ॐ भौमाय० भौमं० ॥ ॐ बुधाय० बुधं० ॥ ॐ बृहस्पतये० बृहस्पतिं० ॥ ॐ शुक्राय० शुक्रं० ॥ ॐ शनैश्चराय नमः शनैश्चरं० ॥ ॐ राहवे० राहुं० ॥ ॐ केतवे० केतुं० ॥ ॐ कालाय० कालं० ॥ ॐ युगाय० युगं० ॥ ॐ

संवत्सराय० संवत्सरं० ॥ ॐ अयनाय० अ-यनं०॥ ॐ ऋतवे० ऋतुं ॥ ॐ मासाय नमः० मासं० ॥ ॐ पक्षाय० पक्षं० ॥ ॐ जन्मति-थये० जन्मतिथीं० ॥ ॐ जन्मराशये० जन्म-राशिं० ॥ ॐ जन्मलग्नाय० जन्मलग्नं० ॥ ॐ शिवायै० शिवां० ॥ ॐ संभूत्यै० संभूतो-मा० ॥ ॐ प्रीत्यै० प्रीतिं० ॥ ॐ सन्तत्यै० सन्ततिमा०॥ ॐ अनसूयायै० अनसूयां ॥ ॐ क्षमायै० क्षमां॥ ॐ उपविष्टायै० उपविष्टां०॥ ॐ भद्रायै० भद्रां ॥ ततः पंक्तिरूपेण अष्टदलानि त्रीणि विरच्य तदुपरि पूगीफले देवतामावाहयेत्॥ ॐ षष्ठीदेव्यै० षष्ठीदेवीं० ॥ ॐमार्कण्डेयाय० मार्कण्डेयं०॥ ॐ जमदग्नये० जमदग्नि० ॥ पुनदस्तग्रे पंक्तिरूपेणाक्षतपुञ्जेषु ॥ अश्वत्थाम्ने० अश्वत्थामानं० ॥ एवं सर्वत्र-म् ॥ ॐ बलये० बलिं० ॥ ॐ व्यासाय० व्या-सं० ॥ ॐ हनुमते० हनुमन्तमा० ॥ ॐ विभी-

षणाय० विभीषणमा० ॥ ॐ कृपाचार्याय० कृपाचार्यं० ॥ ॐ परशुरामाय० परशुरामं० ॥ ॐ कार्तिकेयाय० कार्तिकेयं० ॥ ॐ पुनः पंक्तिरूपेणाक्षतपुञ्जेषु ॥ ॐ इष्टदेवतायै० इष्टदेवतां० ॥ ॐ स्थानदेवतायै० स्थानदेवतामा० ॥ ॐ वास्तुदेवतायै० वास्तुदेवतामा० ॥ ॐ क्षेत्रपालाय० क्षेत्रपालं० ॥ ॐ पृथिव्यै० पृथिवीं० ॥ ॐ अद्भ्यो नमः इदमद्भ्यो० ॥ ॐ तेजसे० इदं तेजसे० ॥ ॐ वायवे० इदं वायवे० ॥ ॐ आकाशाय० इदं आकाशं० ॥ ॐ महामृत्युञ्जयाय० महामृत्युञ्जयमा० ॥ सर्वासां समन्तात्प्रागादितः दिक्षु विदिक्षु वा पंक्तिरूपेण दिक्पालान् ॥ ॐ इन्द्राय० इन्द्रं० ॥ ॐ अग्नये० अग्निं० ॥ ॐ यमाय० यमं० ॥ ॐ निर्ऋतये० निर्ऋतिं० ॥ ॐ वरुणाय० वरुणं० ॥ ॐ वायवे० वायुं० ॥ ॐ कुबेराय० कुबेरं० ॥ ॐ ईशानाय० ईशानं० ॥ ॐ ब्रह्म-

भूतेभ्यो नम इति बलिं दद्यात् ॥ ततोऽत्रैव स्थण्डिले पञ्चभूसंस्कारपूर्वकं लौकिकाग्निं प्रतिष्ठाप्य । ब्रह्मोपवेशनाद्याज्यभागान्तं कृत्वा॥ततो घृताक्त-तिलैर्नाममन्त्रेण षष्ठीदेवी-मार्कण्डेय-जमदग्नी-नां प्रीत्यर्थमष्टाष्टसंख्यया अन्वाहितदेवतानामे-कैकयाऽऽहुत्या महाव्याहृत्याऽष्टाविंशतिसंख्यया च जुहुयात् ॥ शेषेण स्विष्टकृत् ॥ ततो भूराद्या नवाहुतय आज्येन ॥ ततः संस्रवप्राशनादि-प्रणीताविमोकान्तं होमशेषं समाप्य ॥ ततो ग्रहप्रीत्यर्थं यथाशक्ति दानानि कृत्वा ॥ तत्रादौ सुवर्णयुक्ततिलपात्रदानम् ॥ तिलाः काश्यप-सम्भूतास्तिलाः पापहराः स्मृताः ॥ तिलका-ञ्चनदानेन दीर्घायुष्यं ददातु मे ॥ इदं तिल-पात्रं सदक्षिणाकं दीर्घायुष्यप्राप्तिकामनया मा-र्कण्डेयाद्यावाहितदेवताप्रीत्यर्थं अमुकशर्म्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ ततः घृतपूरित कांस्यपात्रे मुखावलोकनम् ॥ ॐ रूपेण वो रूप-

मध्या गान्तुथो वो विश्ववेदा विभजतु ॥
ऋतस्य यथा प्रेतचन्द्रदक्षिणा विश्वः पश्यन्य-
न्तुरिक्षं यत्तस्व सदस्यैः ॥ ततो घृतपूरितकांस्य-
पात्रदानम् ॥ आज्यं तेजसमुद्दिष्टमाज्यं यज्ञे
प्रतिष्ठितम् ॥ आज्यपात्रप्रदानेन दीर्घायुष्यं
कुरुष्व मे ॥ इदमाज्यपात्रं सदक्षिणाकं दी-
र्घायुः श्रीप्राप्तिकामनया श्रीमार्कण्डेयाद्यावाहि-
तदेवताप्रीत्यर्थं अमुकशर्मणे ब्राह्मणाय तुभ्यमहं
संप्रददे ॐ यदा बध्नमिति दक्षिणहस्ते
पोटलिकां बध्वा वर्षग्रन्थि सम्पूज्य ॥ कृतस्य
वर्द्धापनकर्मणः साङ्गतासिध्यर्थं गोनिष्क्र-
यभूतं द्रव्यं अमुकगोत्रायाऽमुकशर्मणे ब्राह्म-
णाय तुभ्यमहं सम्प्रददे ॥ ततस्तिल-
शर्करायुतं पयः पिबेत् ॥ तत्र मन्त्रः ॥ सतिलं
शर्करामिश्रं अञ्जल्यर्धमितं पयः ॥ मार्कण्डेया-
द्वलं लब्ध्वा पिबाम्यायुर्विवृद्धये ॥ इति मन्त्रेण
पिबेत्॥कृतस्य वर्द्धापनकर्मणः साङ्गतासिद्धयर्थं

यथाशक्ति ब्राह्मणान्भोजयिष्ये ॥ पूर्वोच्चारित० तन्मध्ये न्यूनातिरिक्तदोषपरिहारार्थं नानानां गोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे ॥ ब्राह्मणेभ्यो गन्धादिभिः सम्पूज्य तेभ्यो दक्षिणां दत्वा तैराशिषो गृहीत्वा यान्तु देवेति गच्छ गच्छेति च देवता अग्निं च विसृज्य ॥ प्रमादादिति यस्य स्मृत्येति च नत्वा ॥ यथाशक्ति ब्राह्मणान्भोजयेत् ॥

काशीस्थमध्यमेश्वरवास्तव्येन प्रसिद्धकर्मकाण्डिना
पं० श्रीवायुनन्दनमिश्रेण विरचिता ।

पुस्तकप्राप्तिस्थानम्—

मास्टर खेलाड़ीलाल ऐंड संस

संस्कृत बुकडिपो,

कचौड़ीगली, बनारस सिटी ।

शाखा—

मास्टर खेलाड़ीलाल ऐण्ड सन्स

संस्कृत बुकडिपो,

मुरादपुर, बाँकीपुर, पटना ।

# पण्डित वायुनन्दनमिश्रकृतग्रन्थरत्नानि।

| | |
|---|---|
| अर्कविवाहपद्धति — | -)॥ |
| उपनयनपद्धति— | =) |
| कुम्भविवाह— | -) |
| ग्रहशान्ति— | ॥) |
| गोदानपद्धति — | -) |
| दुर्गासप्तशती—गुटका | ।) |
| ,, —पत्रात्मक | ॥) |
| मूलशान्ति— | =) |
| ,, —चक्र | =) |
| रामविवाहपद्धति— | =)॥ |
| रुद्रयागपद्धति— | १) |
| वास्तुशान्ति— | ।=) |
| वाशिष्ठीहवनपद्धति— | =) |
| विवाहपद्धति— | =) |
| विष्णुयागपद्धति— | ॥) |
| श्रावणीप्रयोग — | ।) |
| श्रीसत्यनारायण व्रतकथा—भा० टी० | ।-) |

पुस्तक प्राप्तिस्थानम्—

## मास्टर खेलाड़ीलाल ऐण्ड सन्स,

**संस्कृत बुकडिपो,**

कचौड़ीगली, बनारस सिटी।

शाखा—मुरादपुर, बाँकीपुर, पटना।

